अश्विना पिबताम् । आश्विनौ पिबताम् मधु मधुरस्वादोपलक्षितम् । सोमम्पिबती । सरस्वत्या च संजोषसा समानसोमपानौ । इन्द्रश्च सुत्रामा वृत्रहा पिबतु मधु । ततो भूयोभूयोऽश्विसरस्वतीन्द्राः जुषन्तां पिबन्ताम् सोम्यम्मधु सोममयम्मधु ॥ २० ॥

इति उव्वटकृतौ मन्त्रभाष्ये विंशतितमोऽध्यायः ॥ २० ॥

आनन्दपुरवास्तव्यजैय्यटाख्यस्य सूनुना ॥
उव्वटेन कृतम्भाष्यं पदवाक्यैः सुनिश्चितैः ॥ १ ॥

---

अश्विसरस्वतीन्द्रदेवत्यानुष्टुप् । अश्विना अश्विनौ मधु मधुरस्वादं सोमं पिबतां भक्षयताम् । कीदृशौ अश्विनौ सरस्वत्या सजोषसा सजोषसौ जोषः प्रीतिः असुन् समानं जोषः प्रीतिर्ययोस्तौ सरस्वत्या सह प्रीतिमन्तावित्यर्थः । किञ्च सुष्ठु त्रायते रक्षति सुत्रामा वृत्रं हतवान् वृत्रहा ईदृश इन्द्रः अश्विनौ सरस्वती च मधु मधुरं सोम्यं सोममयं हविर्जुषन्ताम् सेवन्ताम् मये चेति सोमशब्दात् मयडर्थे यप्रत्ययः सोममयं सोम्यम् ॥ ९० ॥

श्रीमन्महीधरकृते वेददीपे मनोहरे ।
सेकासन्धादिहौत्रान्तो विंशोऽध्यायो निरूपितः ॥ २० ॥